॥ श्रीविष्णोः षोडशनामस्तोत्रम् ॥

औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम् ।
शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥ १॥

युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम् ।
नारायणं तनुत्यागे श्रीधरं प्रियसंगमे ॥ २॥

दुःस्वप्ने स्मर गोविंदं संकटे मधुसूदनम् ।
कानने नारसिंहं च पावके जलशायिनम् ॥ ३॥

जलमध्ये वराहं च पर्वते रघुनन्दनम् ।
गमने वामनं चैव सर्वकार्येषु माधवम् ॥ ४॥

षोडशैतानि नामानि प्रातरूत्थाय यः पठेत् ।
सर्वपापविर्निमुक्तो विष्णुलोके महीयते ॥ ५॥

। इति श्रीविष्णोः षोडशनामस्तोत्रं सम्पूर्णम् ।